॥ श्रीवेङ्कटेशविजयार्यासप्तविभक्तिस्तोत्रम् ॥

श्रीवेङ्कटाद्रिधामा भूमा भूमाप्रियः कृपासीमा ।
निरवधिकनित्यमहिमा भवतु जयी प्रणतदर्शितप्रेमा ॥ १॥

जय जनता विमळीकृतिसफलीकृतसकलमङ्गलाकार ।
विजयी भव विजयी भव विजयी भव वेङ्कटाचलाधीश ॥ २॥

कनीयमन्दहसितं कञ्चन कन्दर्पकोटिलावण्यम् ।
पश्येयमञ्जनाद्रौ पुंसां पूर्वतनपुण्यपरिपाकम् ॥ ३॥

मरतकमेचकरुचिना मदनाज्ञागन्धिमध्यहृदयेन ।
वृषशैलमौलिसुहृदा महसा केनापि वासितं ज्ञेयम् ॥ ४॥

पत्यै नमो वृषाद्रेः करयुगपरिकर्मशङ्खचक्राय ।
इतरकरकमलयुगलीदर्शितकटिबन्धदानमुद्राय ॥ ५॥

साम्राज्यपिशुनमकुटीसुघटललाटात् सुमङ्गला पाङ्गात् ।
स्मितरुचिफुल्लकपोलादपरो न परोऽस्ति वेङ्कटाद्रीशात् ॥ ६॥

सर्वाभरणविभूषितदिव्यावयवस्य वेङ्कटाद्रिपतेः ।
पल्लवपुष्पविभूषितकल्पतरोश्चापि का भिदा दृष्टा ॥ ७॥

लक्ष्मीललितपदाम्बुजलाक्षारसरञ्जितायतोरस्के ।
श्रीवेङ्कटाद्रिनाथे नाथे मम नित्यमर्पितो भारः ॥ ८॥

आर्यावृत्तसमेता सप्तविभक्तिर्वृषाद्रिनाथस्य ।
वादीन्द्रभीकृदाख्यैरार्यै रचिता जयत्वियं सततम् ॥ ९॥

॥ इति श्रीवेङ्कटेशविजयार्यासप्तविभक्तिस्तोत्रं संपूर्णम् ॥